श्रीगणेशायनमः ॥ अथ होमपद्धतिप्रारंभः ॥ सुस्नातःप्राङ्मुखोभूत्वायजमानःकृताह्निकः ॥ आहूयब्राह्मणान्कुर्यात्प्रतिज्ञांविधिवत्तथा ॥ १ ॥ ईशान्यांमंडलंकृत्वाग्रहाणांस्थापनंततः ॥ स्थापनंमातृकाणांचवसोर्द्धाराश्चस्थापयेत् ॥ २ ॥ वर्णनंस्वस्तिपुण्याहवाचनंकंकणंतथा ॥ ज्वलनस्थापनंकृत्वासमाप्यकुशकंडिकाम् ॥ ३ ॥ वेदमंत्रैःप्रतिष्ठांचकुंभस्यावाहयेत्सुरान् ॥ पुष्पमाल्यादिभिःसर्वान्पूजयेद्भक्तिसंयुतः ॥ ४ ॥ गुडौदनादिनैवेद्यंसर्वेभ्योऽग्रेनिवेदयेत् ॥ ततआज्याहुतिंहुत्वाहोमःकार्यस्तिलांधसा ॥ ५ ॥ तथाप्रधानदेवस्यहोमःकार्योयथाविधि ॥ स्विष्टकृद्द्रव्यशेषेणघृतेनैवनवाहुतीः ॥ ६ ॥ दिक्पालेभ्योवलिंदीपंदद्यात्क्षेत्राधिपायच ॥ पूर्णाहुतिमथोहुत्वावर्हिर्होमादिकंचरेत् ॥ ७ ॥ ततोऽभिषेकंतिलकंब्राह्मणेभ्यःसुदक्षिणाम् ॥ मंत्रपाठोग्रहाणांचविसर्जनमतःपरम् ॥ भोजनंब्राह्मणैःसार्धंसतांचायमनुक्रमः ॥ ८ ॥ इत्यनुक्रमणिका ॥ अथइतिकर्तव्यता॥तत्रप्रथमंकालज्ञानंकृत्वा सूर्यादिनवग्रहाणामीश्वराद्यधिदेवतानामग्न्यादिप्रत्यधिदे

वतानांगणेशादिपंचलोकपालानामिंद्रादिदशदिक्पालानांचप्रीतयेसकलदुरितोपशमनार्थंसकलकल्याणप्राप्त्यर्थंनवग्रहमखकर्माहंकरिष्ये ॥ इतिप्रतिज्ञांकृत्वैशान्यामष्टदलंकमलंनिरूप्य सूर्यादीन्स्थापयेत् ॥तत्रायंस्थापनक्रमः॥ आरक्तंभास्करंमध्येवर्तुलंद्वादशांगुलम् ॥ आग्नेय्यां श्वेतमर्धेन्दुमर्काद्विगुणमायतम् ॥१॥ याम्यामारंत्रिकोणंचरक्तंसूर्याच्चतुर्गुणम् ॥ ऐशान्यांधनुपाकारंबुधंपीतंपडंगुलम् ॥ २ ॥ जीवमष्टांगुलंपीतमुत्तरेपंकजाकृतिम् ॥ नवांगुलंभृगुंपूर्वेचतुष्कोणंसितप्रभम् ॥ ३ ॥ सप्तांगुलंशनिंकृष्णंदंडाकारंचपश्चिमे॥नैर्ऋत्यांमकराकारंराहुंधूम्रंनवांगुलम् ॥ ४ ॥ वायव्यांधूमलंकेतुंखड्गाकारंपडंगुलम् ॥ स्थापयेदक्षतैःसर्वान्साधिप्रत्यधिदेवतान् ॥ ॥५॥ सर्वेवामंडलाकृतयःस्थापनीयाःपृथक्पृथक् ॥शुक्रार्कौप्राङ्मुखौस्थाप्यौगुरुसौम्यावुदङ्मुखौ ॥ प्रत्यङ्मुखौसोमशनीशेपायाम्यमुखाःस्मृताः ॥ ६ ॥ अथवा ॥ आदित्याभिमुखाःसर्वे स्थापनीयाः ॥ योयस्याधिदेवतायश्चयस्यप्रत्यधिदेवतासतत्समीपेस्थापनीयः ॥ तद्यथा अधि

देवतानांस्थापनम्॥सूर्यस्यदक्षिणपार्श्वेरुद्रंश्वेतवर्णंस्थापयेत् ॥ चंद्रस्यदक्षिणेउमांरक्तवर्णाम् ॥
भौमस्यदक्षिणेस्कंदंपीतम् ॥ बुधस्यदक्षिणेविष्णुंपीतम् ॥ गुरोर्दक्षिणेब्रह्माणंरक्तम् ॥ शुक्र
स्यदक्षिणेइंद्रंपीतम् ॥ शनेर्दक्षिणेयमंकृष्णम् ॥ राहोर्दक्षिणेतालंधूम्रवर्णम् ॥ केतोर्दक्षिणेचित्र
गुप्तलोहितवर्णंस्थापयेत् ॥ अथप्रत्यधिदेवतानांस्थापनम् ॥ सूर्यस्यवामपार्श्वेअग्निमारक्तंस्था
पयेत ॥ चंद्रस्यवामपार्श्वेजलंश्वेतम् ॥ भौमस्यवामेभूमिंरक्ताम् ॥ बुधस्यवामेविष्णुंपीतम् ॥
गुरोर्वामेइंद्रंपीतम् ॥ शुक्रस्यवामेइंद्राणींपीताम् ॥ शनेर्वामेप्रजापतिंश्वेतम् ॥ राहोर्वामेसर्पंकृ
ष्णम् ॥ केतोर्वामेब्रह्माणंरक्तंस्थापयेत् अथपंचलोकपालानांस्थापनम् ॥ राहोरुत्तरभागेगण
पतिंपीतंस्थापयेत् ॥ शनेरुत्तरभागेदुर्गांलोहितवर्णाम् ॥ सूर्योत्तरेवायुंपीतम् ॥ शुक्रस्यपूर्वभा
गेआकाशंनीलवर्णम् ॥ राहोर्दक्षिणेअश्विनौशुक्लवर्णौ ॥ अथदशदिक्पालानांस्थापनम् ॥ मंड
लस्यपूर्वस्यांदिशिइंद्रंपीतवर्णंस्थापयेत् ॥ आग्नेयकोणेऽग्निंलोहितम् ॥ दक्षिणेयमंकृष्णम् ॥ नै

दिति । ऐशान्येअव्रणंकलशंशुद्धंस्थापयेत्तंडुलोपरीति । तत्रादौयजमान आचम्यप्राणानायम्य हस्तपुटौसंयोज्य गणनाथंप्रार्थयेत् ॥ तद्यथा ॥ ॐ यत्पादपल्लवयुगंविनिधायकुंभद्वंद्वेप्रयाणसमयेसगणाधिराजः ॥ विघ्नान्विहंतुमलमस्यजगत्रयस्यगोविंदमादिपुरुषंतमहंभजामि ॥१॥ उद्यद्दिनेशरुचिरंनिजहस्तपद्मैः पाशांकुशाभयवरान्दधतंगजास्यम् ॥ रक्तांबरंसकलदुःखहरंगणेशं ध्यायेत्प्रसन्नमखिलाभरणाभिरामम् ॥ २ ॥ अविघ्नंकुरुतेनित्यंविघ्नंचपरिहन्यते ॥ यात्रामंगलसिद्ध्यर्थमेकदन्तनमोस्तुते ॥ ३ ॥ सुमुखश्चैकदंतश्चकपिलोगजकर्णकः ॥ लंबोदरश्चविकटोविघ्ननाशोविनायकः ॥ ४ ॥ धूम्रकेतुर्गणाध्यक्षोभालचंद्रोगणाधिपः ॥ द्वादशैतानिनामानियःपठेच्छृणुयादपि ॥५॥ विद्यारंभेविवाहेचप्रवेशेनिर्गमेतथा ॥ संग्रामेसंकटेचैवविघ्नस्तस्यनजायते॥ ॥ ३ ॥ मंजुलारुणविस्तीर्णकरपुष्करराजितम् ॥ शिवोद्भवंतंभास्वंतंकमलामोदजंभजे ॥ ७ ॥ इतिसंप्रार्थ्य अक्षतान्गृहीत्वा ॥ गजवक्त्रायनमः ॐमनोज्जूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिम

न्तनात्वेरिष्टयंज्ञर्ठंसमिमंदधातुव्विश्वेदेवासइहमादयन्तामोम्प्रतिष्ठेतिप्रतिष्ठाप्यावाहयेत् ॥हेहेरं
बत्वमेह्येहिअंबिकात्र्यंबकात्मज ॥ सिद्धिबुद्धिपतेत्र्यक्षसर्वलोकपितःपितः ॥ १ ॥ नागास्यना
गहारत्वंगणनाथचतुर्भुज ॥ भूपितःस्वायुधैर्दिव्यैःपाशांकुशपरश्वधैः ॥ २ ॥ आवाहयामिपूजा
र्थंरक्षार्थंचममप्रभो ॥ इहागत्यगृहाणत्वंपूजांरक्षचमेक्रतुम् ॥ ३ ॥ आगच्छविघ्नराजेन्द्रस्थानेचा
त्रस्थिरोभव ॥ यावत्पूजासमाप्येततावत्त्वंसन्निधौभव ॥ ४ ॥ आगच्छदेवदेवेशगणनाथनमो
स्तुते ॥ सूर्यकोटिसमाभासगजवक्त्रचतुर्भुज ॥ ५ ॥ गजवक्त्रगणाध्यक्षसर्वविघ्नविनाशन ॥
लंबोदरत्रिनेत्रत्वमागच्छगणनायक ॥ ६ ॥ ॐ गणानांत्वागणपतिर्ठंहवामहेप्रियाणांत्वाप्रियप
पतिर्ठंहवामहेनिधीनांत्वानिधिपतिर्ठंहवामहेव्वसोमम ॥ आहमजानिगर्ब्भधमात्वमजासिगर्ब्भ
धम्॥ॐ विश्वानिदेवसवितर्दुरितानिपरासुव॥ यद्भद्रन्तन्नआसुव ॥ ॐ स्वस्तिनइंद्रोवृद्धश्रवाः
स्वस्तिनःपूषाव्विश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ दीर्घायु

त्वायवलायव्वर्चसेसुप्रजास्त्वायसहस्त्रायुरथोजीवशरदः शतम् ॥ द्यौः शांतिरंतरिक्षर्ठ्ंशांतिः पृथिवीशांतिरापःशांतिरोषधयःशांतिर्व्वनस्पतयःशांतिर्व्विश्वेदेवाःशांतिर्ब्ब्रह्मशांतिःसर्व्वर्ठ्ंशांतिः शांतिरेवशांतिः सामाशांतिरेधि ॥ द्विपदचतुष्पदेभ्यःसुशांतिर्भवतु॥ॐ अथातःसंप्रवक्ष्यामिगणयागमुदाहरम् ॥ कामकेवासकेयज्ञेविवाहेव्रतसंयमे ॥ आदौगणेश्वरःपूज्यःसर्वकामफलप्रदः ॥ मासमासाधिकःपूज्योगणपतिर्योभविष्यति ॥ येनपूजायतेयज्ञेसमाचार्योवनस्पतिः ॥ कोसौमासपतिर्देवःसर्वविघ्नविनाशनः ॥ आदौगणेश्वरःश्रेष्ठोविघ्ननाशोविनायकः ॥ सर्वकामकृतौपूज्योयज्ञकालेसनातनः ॥ मंडलंचततःकुर्यात्कोष्ठानांद्वादशस्मृतम् ॥ सिंधूरस्थापितंदेवमीशानेचविनायकम् ॥ क्रमयुक्तस्ततःस्थाप्योमासमासाधिकःप्रभुः ॥ मार्गेगणपतिःपूज्यःपौपेचैवविनायकः ॥ गजवक्त्रोमाघमासेभालचंद्रोऽथफाल्गुने ॥ उपेन्द्रश्चैत्रमासेचवैशाखेविघ्ननाशनः ॥ ज्येष्ठेशिवसुतःपूज्यआपाढेहरनंदनः ॥ श्रावणेविघ्नराजस्तुभाद्रेऽथोमोदकप्रियः ॥ आश्विनेचमहावी

योमहावीर्यश्चकार्तिके ॥ विघ्नहर्त्ताऽधिकेमासिएवंपूज्योगणेश्वरः ॥ गंधपुष्पैस्तथाधूपैःकर्पूरैर्य
क्षकर्दमैः॥मृगाणांकुंकुमैःशुभ्रैःसिंदूरेणविशेषतः॥रक्तोत्पलदलैःपूज्योबिल्वपत्रैश्चकेशरैः ॥ माल
तीकेतकीपुष्पैर्हेमपुष्पैर्विचक्षणैः ॥ अर्घधूपैश्चदीपैश्चरक्तवस्त्रेणछादयेत् ॥ पूजांकुर्यात्तुदेव
स्यदद्यान्मोदकभोजनम् ॥ नमोमूषकमारूढशुभकर्त्रेऽथतेनमः ॥ नमःकात्यायनी
पुत्रलंबकर्णायवैनमः ॥ उद्यंतरविरूपायविद्याबुद्धिविचक्षण ॥ देहिमेपुत्रसौभाग्यंदेहि
मेसुखसंपदम् ॥ वांछासिद्धिमथोदेहिविद्यांदेहियशोधनम् ॥ शत्रवोनाशतांयांतुदुर्जनोनाशता
मियात ॥ स्वानांचैवहितार्थायप्रार्थयित्वागणेश्वरम् ॥आदौपूज्यगणेशंतुशांतिपाठमथाचरेत्॥
नाशयेत्सर्वदुष्टानिकल्याणंजायतेसदा ॥ कृष्णेनभाषितंपूर्वंदेवतानांहितायच ॥ उत्पातेविघ्नसं
भूतौपूजयेद्गणनायकम्॥ इत्यावाह्य ॥ अस्यनवग्रहमखकर्मणःसांगतासिद्ध्यर्थंश्रीगणेशदेवस्य
पंचोपचारैःपूजनंकरिष्येइतिप्रतिज्ञांकृत्वा ॥ सुमुखायनमस्तुभ्यंगणाधिपतयेनमः ॥ पुष्पासनं

मयादत्तंविघ्नपुंजंनिवारय ॥ श्रीगणपतयेनमःआसनम् ॥ उमापुत्रायदेवायसिद्धिवंद्यायतेनमः॥
पाद्यंगृहाणदेवेशविघ्नपुंजंनिवारय॥श्रीलंबोदरायनमःपाद्यम् ॥ द्वैमातुरकृपासिंधोदेवपाण्मातुरा
ग्रज ॥ वरदस्त्वंवरंदेहिवांछितंवांछितार्थदम् ॥ अनेनार्घ्यप्रदानेनवांछितार्थंप्रयच्छमे ॥ एकदं
तमहाकायनागयज्ञोपवीतक ॥ गणाधिदेवदेवेशगृहाणार्घ्यंनमोस्तुते ॥ इत्यर्घ्यम् ॥ नर्म
दाचंद्रभागादिगंगासंगमजैर्जलैः ॥ स्नापितोसिमयादेवविघ्नपुंजंनिवारय ॥ श्रीउमासुतायनमःस्ना
नम् ॥ सूर्यकोटिसमाभासनागयज्ञोपवीतकम् ॥ सुवर्णसूत्रैरचितमुपवीतंगृहाणमे ॥ इभवक्त्रन
मस्तेस्तुगृहाणपरमेश्वर॥ ब्रह्मसूत्रंमयादत्तंविघ्नपुंजंनिवारय ॥ श्रीविघ्नेश्वरायनमःउपवीतम् ॥
रक्तांवरधराधीशपाशांकुशधरेश्वर॥ वस्त्रयुग्मंमयादत्तंगृहाणपरमेश्वर॥शूर्पकर्णायनमोवस्त्रम् ॥
ईशपुत्रनमस्तुभ्यंनमोमूषकवाहन ॥ गंधंगृहाणदेवेशविघ्नपुंजंनिवारय ॥ गणाध्यक्षायनमोगंध
म् ॥ रक्तचंदनसंमिश्रैरक्षतैःपूजयाम्यहम् ॥ सर्वभूतहितार्थायविघ्नराजजगद्गुरो ॥ विघ्नहर्त्रेनमः

अक्षतान्समर्पयामि ॥ पाटलामल्लिकादूर्वाशतपत्राणिवैप्रभो ॥ पुष्पाणीशगृहाणत्वंविघ्नपुंजं
निवारय ॥ विघ्ननाशिनेनमःपुष्पम् ॥ लंबोदरविशालाक्षधूम्रकेतोनमोनमः ॥ धूपंगृहाणदेवेश
विघ्नपुंजंनिवारय॥ विकटायनमो धूपम् ॥ घृताक्तवर्तिसंयुक्तंवह्निनायोजितंमया ॥ दीपंगृहाणदे
वेशरुद्रप्रियनमोस्तुते ॥ वामनायनमोदीपम् ॥ नमोमोदकहस्तायभालचंद्रायतेनमः ॥ नैवेद्यं
गृह्यतांदेवविघ्नपुंजंनिवारय॥सर्वदेवाधिदेवायनमोनैवेद्यम् ॥इदंफलंमयादेवस्थापितंपुरतस्तव॥
तेनमेसफलावाप्तिर्भवेज्जन्मानिजन्मानि ॥ सर्वार्तिनाशिनेनमःफलम् ॥ गजाननमस्तुभ्यंविना
यकनमोनमः ॥ आचम्यतांगणाध्यक्षविघ्नपुंजंनिवारय ॥ हेरंबायनमः आचमनीयम्॥पूगीफलंस
कर्पूरंनागवल्लीदलैर्युतम् ॥ नानाभोग्यसमायुक्तंतांबूलंप्रतिगृह्यताम्॥विघ्नराजायनमःतांबूलम्॥
हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतःशांतिंप्रयच्छमे ॥ विनायकायन
मोदक्षिणाम् ॥ चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच ॥ त्वमेवसर्वज्योतींषिआर्तिक्यंप्रतिगृह्य

मानंसपतोकंकमलाक्षश्वरक्षतु ॥ रक्षाहीनंतुयत्स्थानंतत्सर्वंरक्षतांहरिः ॥ वेदमंत्रैश्चकर्तव्यारक्षा शुभ्रैश्चसर्षपैः ॥ आदौजपेद्गणानांत्वानिरुक्तंजातवेदसम् ॥ यंदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्व दा ॥ स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु ॥ अपक्रामंतुभूतानि पिशाचाःसर्वतोदिशम् ॥ सर्वेषामविरोधेनब्रह्मकर्मसमारभे ॥ इतिरक्षा ॥ पूर्वादिदिक्षु अक्षतविकरणम् ॥ हस्तेकंकणबंध नंकर्तव्यम् ॥ तत्रमंत्रः ॥ ॐ यदाबध्नंदाक्षायणाहिरण्यठंशतानीकायसुमनस्यमानाः ॥ तन्मऽ आबध्नामिशतशारदायायुष्माञ्जरदष्टिर्यथासम् ॥ १ ॥ ॐ त्वंय्यविष्ठदाशुषोनॄंःपाहिशृणुधी गिरः ॥ रक्षातोकमुतन्मना ॥ २ ॥ अन्यच्च ॥ येनराजाबलिर्बद्धोदानवेंद्रोमहाबलः ॥ तेनत्वाम नुबध्नामिरक्षेमाचलमाचलेति ॥ ततईशानकोणेअव्रणंकलशं अक्षतभूपितंस्थाप्यभूमिस्पर्शमंत्रः। भूरसिभूमिरसिदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्रींपृथिवींयच्छपृथिवींदृठंहपृथिवींमाहि ठंसीः ॥ इतिभूमिस्पर्शनम् ॥ धान्यमसीतिधान्यम् ॥ धान्यमसिधिनुहिदेवान्प्राणात्वोदानाय

त्वाव्यानायत्वादीर्घामनुप्रसितिमायुषेधान्देवोवःसविताहिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेणपा
णिनाचक्षुषेत्वामहीनाम्पयोसि॥ तस्योपरिकलशंस्थापयेत्॥ आजिघ्रकलशंमह्यात्वाविशंत्विद
वः पुनरूर्ज्जानिवर्तस्वसानः सहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्मांविशताद्रयिः॥वरुणस्येति उदकं
निक्षिपेत् ॥ वरुणस्योत्तंभनमसिवरुणस्यस्कंभसर्ज्जनीस्थोवरुणस्यऋतसदन्यसिवरुणस्यऋत
सदनमसिवरुणस्यऋतसदनमासीद ॥ वसोःपवित्रेतिवस्त्रंकंठेवेष्टयेत् ॥ वसोःपवित्रमसिश
तधारंवसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाका
मधुक्षः॥ याः फलिनीर्य्याअफलाअपुष्पायाश्चपुष्पिणीः॥बृहस्पतिप्रसूतास्तानोमुंचत्वंहसः॥
कनकं १ कुलिशं २ नीलं ३ पद्मरागं ४ च मौक्तिकम् ५॥ एतानिपंचरत्नानि ॥ परि
वाजेतिमंत्रेणकलशेनिक्षिपेत् ॥ परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्ना
निदाशुषे ॥ इतिपंचरत्नानि निक्षिपेत् ॥ हिरण्यगर्भइतिदक्षिणाम् ॥ हिरण्यगर्भःसमवर्तता

ग्रेभूतस्यजातःपतिरेकऽआसीत ॥ सदाधारपृथिवींद्यामुतेमां कस्मैदेवायहविषाविधेम ॥
इतिद्रव्यंक्षिपेत् ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्व
येश्रियम् ॥ इतिगंधंक्षिपेत ॥ याऽओषधीरिति सर्वौषधीः ॥ याओषधीः पूर्वाजातादेवेभ्य
स्त्रियुगंपुरा ॥ मनैनुबभ्रूणामहंशतंधामानिसप्तच ॥ ततोस्मिन्कलशेमृन्निक्षिपेत ॥
अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥ राजद्वाराद्गोकुलाच्चमृदमानीयनिक्षिपेत् ॥
स्योनापृथिवीतिमंत्रेणसप्तमृदः ॥ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मस
प्रथः ॥ कांडात्कांडादितिदूर्वाः॥कांडात्कांडात्प्ररोहंतीपरुषःपरुषस्परि ॥ एवानोदूर्वेप्रतनुसह
स्रेणशतेनच ॥ चूताश्वत्थन्यग्रोधोदुंबरप्लक्षमितिपंचपल्लवान् ॥ अश्वत्थेवोनिषदनंपर्णेवोवसति
ष्कृता ॥ गोभाजइत्किलासथयत्सनवथपूरुषम् ॥ पवित्रेस्थोइतिमंत्रेणपवित्राणिक्षिपेत् ॥ पवि
त्रेस्थोवैष्णव्यौसवितुर्वःप्रसवऽउत्पुनाम्यच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभिः ॥ तस्यतेपवित्रपते

पवित्रपूतस्ययत्कामः पुनेतच्छकेयम्॥पूर्णादर्वीतिमंत्रेणतंडुलपरिपूरितपात्रंकलशोपरिस्थापये
त् ॥ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्जंठ्शतक्रतो ॥ श्रीश्चेतिमं
त्रेण श्रीफलं निधाय ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वे नक्षत्राणिरूपमश्विनौव्यात्तम्॥ इ
ष्णन्निषाणामुम्मइषाणसर्वलोकम्मइषाण॥ ॐ मनोज्जूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्त
नोत्वरिष्टंयज्ञठ्समिमंदधातु ॥ विश्वेदेवासऽइहमादयन्तामो३प्रतिष्ठ ॥ इतिकलशप्रतिष्ठा॥ततो
गणेशवरुणस्थापनम् ॥ गणानान्त्वेतिमंत्रेण गणपतिम् ॥ तत्त्वायामीति वरुणमावाह्य ॥ ॐग
णानान्त्वागणपतिठ्हवामहे प्रियाणांत्वाप्रियपतिठ्हवामहेनिधीनांत्वानिधिपतिठ्हवामहेव्व
सोमम॥आहमजानिगर्भधमात्वमजासिगर्भधम्॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेय
जमानोहविर्भिः॥ अहेडमानोवरुणेहबोध्युरुशठ्समानआयुःप्रमोषीः ॥ ॐभूर्भुवःस्वः गणेशव
रुणौ इहागच्छतामिहतिष्ठतामिति षोडशोपचारैः गणेशवरुणौपूजयेत॥कलशेगंगाद्यावाहनम्॥

महाकायंक्रूरकृत्यंकेतुमावाहयाम्यहम् ॥ ॐ केतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे ॥ समुपद्भिर
रजायथाः ॥ॐ भूर्भुवःस्वः अंतर्वेदिसमुद्भवजैमिनसगोत्र केतोइहागच्छइहातिष्ठ ॥ ९ ॥ अथाधि
देवतानामावाहनम् ॥ मध्येरविदक्षिणपार्श्वे श्वेतपुष्पाक्षतैः रुद्रमावाहयेत् ॥ ॐ त्र्यंबकंयजामहे
सुगंधिंपुष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ त्र्यंबकंयजामहेसुगंधिंपति
वेदनम् ॥उर्वारुकमिवबंधनादितोमुक्षीयमामुतः ॥ १ ॥ शिवइहागच्छइहातिष्ठ ॥ आग्नेय्यांचंद्र
स्यदक्षिणेरक्तपुष्पाक्षतैःउमामावाहयेत् ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपम
श्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मइषाणसर्वलोकम्मऽइषाण ॥ २ ॥ उमेइहागच्छइहतिष्ठ ॥ या
म्यां भौमस्यदक्षिणेपीतपुष्पाक्षतैः स्कन्दमावाहयेत् ॥ ॐ यदक्रन्दःप्रथमंजायमानऽउद्यन्त्स
मुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यंमहिजातंतेअर्वन् ॥ ३ ॥ स्कन्द
इहागच्छइहातिष्ठ ॥ ऐशान्यांबुधदक्षिणेपीतपुष्पाक्षतैः विष्णुमावाहयेत् ॥ ॐ विष्णोरराटमसि

व्विष्णोःश्नप्त्रेस्थोविष्णोः स्यूरसिव्विष्णोर्ध्रुवोसि वैष्णवमसिविष्णवेत्वा ॥ ४ ॥ विष्णोइहाग
च्छइहातिष्ठ ॥ उत्तरेगुरुदक्षिणेश्वेतपुष्पाक्षतैः ब्रह्माणमावाहयेत् ॥ ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ता
द्विसीमतःसुरुचोवेनआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः ॥ ५ ॥ ब्र
ह्मन्इहागच्छइहातिष्ठ ॥ पूर्वेशुक्रस्य दक्षिणेपीतपुष्पाक्षतैः इंद्रमावाहयेत् ॐ त्रातारमिन्द्रमवि
तारमिंद्रꣳ हवेहवेसुहवꣳ शूरमिंद्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रꣳ स्वस्तिनोमघवाधात्विंद्रः
॥ ६ ॥ इंद्रइहागच्छइहातिष्ठ ॥ पश्चिमेशनेर्दक्षिणे कृष्णपुष्पाक्षतैः यममावाहयेत् ॥ ॐ यमाय
त्वामखायत्वासूर्यस्यत्वातपसेदेवस्त्वासविताम्ध्वानक्तुपृथिव्याःसꣳ स्पृशस्पाहि अर्चिरसि
शोचिरसितपोसि ॥ ७ ॥ यमइहागच्छइहातिष्ठ ॥ नैर्ऋत्यांराहुदक्षिणेधूम्रपुष्पाक्षतैः कालमावा
हयेत् ॥ ॐ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामिसमापोऽअद्भिरग्मतसमोषधीभिरोषधीः ॥
॥ ८ ॥ कालइहागच्छइहातिष्ठ ॥ वायव्यांकेतुदक्षिणेरक्तपुष्पाक्षतैः चित्रगुप्तमावाहयेत् ॥ ॐ चि

त्रावसौस्वस्तितेपारमशी ॥ ९ ॥ चित्रगुप्तइहागच्छइहतिष्ठ ॥ अथप्रत्यधिदेवतानामावाहनम् ॥
मध्येसूर्यस्यवामेरक्तपुष्पाक्षतैःअग्निमावाहयेत् ॥ ॐ अग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२
ऽआसादयादिह ॥ १ ॥ अग्नेइहागच्छइहतिष्ठ ॥ आग्नेय्यां चंद्रस्यवामपार्श्वेश्वेतपुष्पाक्षतैः जल
मावाहयेत् ॥ ॐ अश्वग्नेसधिष्टवसौपधीरनुरुध्यसेगर्भेसंजायसेपुनः ॥ २ ॥ आपइहागच्छतइह
तिष्ठत ॥ दक्षिणेभौमवामपार्श्वे रक्तपुष्पाक्षतैः भूमिमावाहयेत् ॥ ॐ स्योनापृथिविनोभवानृक्षरा
निवेशनी ॥ यच्छानः शर्मसप्रथाः ॥ ३ ॥ पृथिवीइहागच्छइहतिष्ठ॥ ईशान्येबुधस्य वामे पीत
पुष्पाक्षतैः विष्णुमावाहयेत् ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाꣳसुरे ॥
॥ ४ ॥ विष्णोइहागच्छइहतिष्ठ ॥ उत्तरेगुरुवामे पीतपुष्पाक्षतैः इंद्रमावाहयेत् ॥ ॐ त्रातार
मिंद्रमवितारमिंद्रꣳहवेहवेसुहवꣳशूरमिंद्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रꣳस्वस्तिनोमघवाधा
त्विंद्रः ॥ ५ ॥ इंद्रइहागच्छ इहतिष्ठ ॥ पूर्वेशुक्रस्यवामेपीतपुष्पाक्षतैः इन्द्राणीमावाहयेत् ॥

ॐ आदित्यैरास्नासीन्द्राण्याऽउष्णीषः पूषासिघर्मायदीष्व ॥ ६ ॥ इंद्राणिइहागच्छइहतिष्ठ ॥
पश्चिमेशनेर्वामेश्वेतपुष्पाक्षतैःप्रजापतिमावाहयेत् ॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वा
रूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयर्ठ०स्यामपतयोरयीणाम् ॥ ७ ॥
प्रजापतेइहागच्छइहतिष्ठ ॥ नैर्ऋत्यांराहोर्वामेकृष्णपुष्पाक्षतैः नागमावाहयेत् ॥ ॐ नमो
स्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येऽअंतरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॥ ८ ॥ अष्ट
कुलीनागइहागच्छइहतिष्ठ ॥ वायव्यांकेतोर्वामेश्वेतपुष्पाक्षतैः ब्रह्माणमावाहयेत् ॥ ॐ ब्रह्मज
ज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः॥ सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चवि
वः ॥ ९ ॥ ब्रह्मन्इहागच्छइहतिष्ठ ॥ अथपंचलोकपालानामावाहनम् ॥ नैर्ऋत्यांराहोरुत्तरभा
गेपीतपुष्पाक्षतैः गणपतिमावाहयेत् ॥ ॐ गणानांत्वागणपतिर्ठ०हवामहे प्रियाणांत्वाप्रियपतिर्ठ०
हवामहे निधीनांत्वानिधिपतिर्ठ०हवामहेव्वसोमम ॥ आहमजानिगर्भधमात्वमजासिगर्भधम्

आकृष्णेनइत्यादिपूर्वोक्तम्।सूर्यादीन्सर्वान्मंडलमध्यस्थापितान्देवान्पूजयेत् ।नैवेद्यमादित्यायगु
डौदनंचंद्रमसेघृतपायसंभौमायमसूरान्नंबुधायक्षीरौदनं गुरवेदध्योदनंशुक्रायघृतौदनं शनैश्चरा
यतिलपिष्टंकृसरान्नंवा आममांसंराहवे चित्रौदनःकेतवे एवंनवग्रहान्पूजयित्वाऽधिदेवतादीन्पूजये
त् ॥ सूर्यादिनवग्रहेभ्योनमः रुद्राद्यधिदेवताभ्योनमः अग्न्यादिप्रत्यधिदेवताभ्योनमः विनाय
कादिपंचलोकपालेभ्योनमः इंद्रादिदशदिक्पालेभ्योनमःहस्तेनजलमादायअनेनपंचोपचारपूज
नेननवग्रहाःप्रीयंताम् ॥ अथमातृपूजनम् ॥ आदौलग्नांवसोर्द्धारांपोडशमातॄश्चपूजयेत॥आदौगौ
रींपूजयेत् ॥ हिमाद्रितनयांदेवींवरदांभैरवप्रियाम् ॥लंबोदरस्यजननींगौरीमावाहयाम्यहम्॥आ
यङ्गौःपृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरंचप्रयन्स्वः॥इतिगौरीमावाहयामिस्थापयामि १ सुव
र्णाभांपद्महस्तांविष्णोर्वक्षस्थलेस्थिताम् ॥ त्रैलोक्यपूजितांदेवींपद्मामावाहयाम्यहम् ॥ ॐहिर
ण्यरूपाउपसोव्विरोकऽउभाविन्द्राऽउदिथःसूर्यश्च ॥ आरोहणंतंवरुणमित्रगर्तं ततश्चक्षथामदितिं

दितिंचमित्रोसिवरुणोसि२ पद्मामा०॥उत्पलाक्षींसुदर्शनांशुचिकुंडलधारिणीम्॥देवराजप्रियांभ
द्रांशचीमावाहयाम्यहम्॥ ॐ कदाचनस्तरीरसिनेन्द्रसश्चसिदाशुषे ॥ उपोपेन्नुमघवन्भूयऽइन्नु
तेदानंदेवस्यपृच्यते ३ शचीमा० ॥ विवस्वतःकरोत्फुल्लांसंस्तुतांपद्मवासिताम् ॥ बुद्धिप्रसादि
नींसौम्यांमेधामावाहयाम्यहम् ॥ मेधांमेवरुणोददातुमेधामग्निःप्रजापतिः ॥ मेधामिन्द्रश्चवायुश्च
मेधांधाताददातुमेस्वाहा ४ मेधामा० ॥ जगत्स्रष्ट्रींजगद्धात्रींपक्षिरूपेणसंस्थिताम् ॥ ॐकारा
क्षींभगवतींसावित्रीमावाहयाम्यहम् ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि॥धियोयोनःप्रचोद
यात् ५ सावित्रीमा० ॥ दैत्यपक्षक्षयकरींदेवानांचाभयप्रदाम् ॥ गीर्वाणवंदितांदेवींविजयामावा
हयाम्यहम् ॥ विज्यंधनुःकपर्दिनोविशल्योबाणवाँउत।अनेशन्नस्ययाऽइषवऽआभुरस्यनिष
ङ्गधिः ६ विजयामा०॥ विश्वभद्रांजयारक्तांरक्तांबरधरांसदा ॥ त्रैलोक्यवंदितांदेवींजयामावाहया
म्यहम् ॥ यातेरुद्रशिवातनूरघोरापापकाशिनी॥ तयानस्तन्वाशंतमयागिरिशंताभिचाकशीहि

७जयामा० ॥ मयूरवाहनारूढांशक्तिखड्गधनुर्धराम् ॥ आवाहयेद्देवसेनांतारकासुरमर्दिनीम् ॥
देवानांभद्रासुमतिर्ऋजूयतांदेवानाꣳरातिरभिनोनिवर्त्तताम् ॥ देवानाꣳसख्यमुपसेदिमाव्वयं
देवानऽआयुःप्प्रतिरंतुजीवसे ८ देवसेनामा० ॥ कव्यमादायसततंपितृभ्योयाप्रयच्छति ॥ पितृ
लोकार्चितांदेवींस्वधामावाहयाम्यहम्॥पितृभ्यःस्वधायिभ्यः स्वधानमः ॥ अक्षन्पितरोमीमदं
तपितरोतीतृप्यन्तपितरःपितरःशुंधद्धम् ९स्वधामा० ॥ हविर्गृहीत्वाससततंदेवेभ्योयाप्रयच्छति
॥स्वर्गलोकार्चितास्वाहासमागच्छममाध्वरे ॥ स्वाहायज्ञंमिमिक्षतःस्वाहोरोरंतरिक्षात्स्वाहाद्या
वापृथिवीभ्याꣳस्वाहाव्वातादारभेस्वाहा १० स्वाहामा० भूतग्राममिमंकृत्स्नंययाउत्पादितंपु
रा ॥ त्रैलोक्यपूजितादेवीमातॄरावाहयाम्यहम ॥ आपोऽअस्मान्मातरःशुंधयंतुघृतेननोघृतप्प्वः
पुनंतु ॥ विश्वꣳहिरिप्प्रंप्रवहंतिदेवीरुदिदाभ्यःशुचिरापूतऽएमि ॥ दीक्षातपसोस्तनूरसितांत्वा
शिवाꣳशग्मांपरिदधेभद्रंव्वर्णंपुष्यन् ११ मातृरा०॥ आवाहयेल्लोकमातॄर्जगत्पालनसंस्थिताः।

शक्राद्यैर्वंदितां देवींतत्रत्यैश्चसुरैरपि ॥ भवतन्नःसमनसौसचेतसावरयसौमायज्ञर्ठ०हिर्ठ०सिएंमा यज्ञपतिंजातवेदसौशिवौभवतमद्यनः १२ लोकमातृरा० ॥ नमस्तुष्टिकरीं देवींलोकानुग्रहकारि णीम् ॥ सर्वकामसमृद्ध्यर्थंधृतिमावाहयाम्यहम् ॥ यत्प्रज्ञानमुतचेतोधृतिश्चयज्ज्योतिरन्तरमृतं प्रजासु ॥ यस्मान्नऽऋतेकिंचनकर्मक्रियतेतन्मेमनः शिवसंकल्पमस्तु ॥ १३ ॥ धृतिमा० ॥ प्रणताइहलोकेस्मिन्पुत्रपुष्टिसुखप्रदा ॥ भक्तेभ्यश्चापिवरदाविद्युज्ज्वालार्ककुण्डला ॥ तत्त्वाया मिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः॥ अहेडमानोव्वरुणेहबोध्युरुशर्ठ०समानऽआयुः प्रमोषीः १४ पुष्टिमावाहयामि ॥ आवाहयामितांतुष्टिंसर्वलोकेषुपूजिताम् ॥ संतोषभाव नार्दीश्चरक्षणायाध्वरेमम ॥ बृहस्पतेपरिदीयारथेनरक्षोहामित्राँ२ऽअपबाधमानः ॥ प्रभंजन्त्से नाःप्रमृणोयुधाजयन्नस्माकमेध्यविता रथानाम् १५ तुष्टिमावा० ॥ तामात्मादिहितां देवीं सर्वकामफलप्रदाम् ॥ वंशरक्षकरींगोत्रींदेवीमावाहयाम्यहम् ॥ प्राणायस्वाहापानायस्वाहा

व्यानायस्वाहा अम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चनससस्त्यःश्वकः सुभाद्रिकाङ्काम्पी
लवासिनोम् १६ आत्मकुलदेवीमा० स्था० ॥ अथमातृचक्रोद्धारः ॥ पंचोर्द्धाःपंचतिर्य
क्चरेखाःकृत्वाविचक्षणैः॥ वायुश्चतुष्कमध्यस्थंगणेशंतत्रपूजयेत ॥ मध्येनैर्ऋत्यकेकोणेगौरीप
श्चाग्निकोणके ॥ शचीपश्चिमतोमेधासावित्रीविजयायमे ॥ जयोत्तरेदेवसेनास्वधामीशानमेवच ॥
स्वाहाचैवतथाग्नेय्यांमात्रिन्द्रेलोकमातरः ॥ मध्यवायुर्धृतिश्चैवनैर्ऋत्येपुष्टिपूजनम् ॥ तुष्टिश्चैव
तुवायव्येमध्येतुकुलदेविका ॥ अथवसोर्द्धारा ॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ वारा
हीचतथेन्द्राणीचामुण्डाःसप्तमातरः ॥ १ ॥ व्वसोःपवित्रमितिमंत्रेण वसोर्द्धारामावाहयामिस्थाप
यामि ॥ अस्यनवग्रहमखकर्मणः सांगतासिद्ध्यर्थंव्वसोर्धारासहिताः षोडशमातॄरहंपूजयिष्ये
॥इतिप्रतिज्ञांकृत्वा॥ततोगंधाक्षतपुष्पादिभिःपूजनंकुर्यात ॥ ततःप्रधानदेवंपूजयेत् ॥ अद्येत्या
दिसर्वेदाशुभप्राप्तिकामनया प्रधानदेवपूजनमहंकरिष्ये ॥ ततोगन्धादिभिःपूजनंकुर्यात् ॥ ततो

१४॥

मंडलस्य बहिर्भागे अगस्त्यंध्रुवमश्विन्यादिनक्षत्राणिमेषादिद्वादशराशीन्ऋग्वेदादिचतुर्वेदान्
कश्यपादिसप्तऋषीन्वस्वष्टकमेकादशरुद्रान्द्वादशादित्यान्एकोनपंचाशन्मरुतः ॥ त्रयोदश
विश्वेदेवान् पितृन्सप्तसमुद्रान् ॥ अष्टौनागकुलानियोगिनीः सिद्धांश्च आवाहयामि स्थापयामि
ततो गंधादिभिः पूजयित्वावक्ष्यमाणवाक्येन ॥ अथद्रव्यत्यागः ॥ ततःकालज्ञानंकृत्वाऽस्मिन्न
वग्रहमखकर्मणि इदंहोमद्रव्यंसूर्यादीनांनवग्रहाणामीश्वराद्यधिदेवतानामग्न्यादिप्रत्यधिदेवता
नां गणेशादिपंचलोकपालानामिंद्रादिदशदिक्पालानां ब्रह्मशिवविष्णुगणपतिदुर्गालक्ष्मीसरस्व
तीक्षेत्रपालपंचभूतविश्वकर्मणांगौर्यादिषोडशमातृणामन्येषामपिस्थापितदेवानांस्वस्वलिंगोक्त
मंत्राहुतिभिर्होमार्थंमयात्यक्तमिति॥अथकुशकंडिकाकथ्यते॥ॐअद्यकर्तव्यहोमकर्मणिकृताकृ
तावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममुकशर्माणंब्राह्मणमेभिश्चन्दनपुष्पाक्षतफलद्रव्यवासोभिः
ब्रह्मत्वेनत्वामहंवृणे॥ ॐवृतोस्मीतिप्रतिवचनम्॥ॐव्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम्

दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते ॥ १ ॥ ॐ यथाविहितंकर्मकुरु॥ॐयथाज्ञानंकरवा
णीति ॥ ततोऽग्नेर्दक्षिणतः शुद्धमासनंदत्त्वातदुपरि प्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिण
क्रमेणानीय अत्रत्वमेवब्रह्माभवेत्यभिधाय॥ कल्पितासनेउपवेशयेत् ॥ ततःप्रणीतापात्रंपुरतः
कृत्वा जलेनापूर्य्य कुशैराच्छाद्यब्रह्मणोमुखमवलोक्याग्नेरुत्तरतः कुशोपरिनिदध्यात् ॥ ततः प
रिस्तरणम् ॥ बर्हिषश्चतुर्थभागमादाय आग्नेय्यादीशानांतंब्रह्मणोग्निपर्यंतं नैर्ऋत्याद्वायव्यांतम
ग्नितःप्रणीतापर्यंतंततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थंकुशत्रयंपवित्रकरणार्थंसाग्रमनं
तर्गर्भंकुशपत्रद्वयंप्रोक्षणीपात्रमाज्यस्थालीसंमार्जनकुशत्रयमुपयमनार्थंवेणीरूपकुशत्रयंप्रादेश
मात्रंसमिधस्तिस्रः स्रुवःआज्यंषट्पंचाशदुत्तरमुष्टिशतद्वयावच्छिन्नतंदुलपूर्णपात्रंपवित्रच्छेदन
कुशानांपूर्वंदिशिक्रमेणासादनीयम् ॥ तस्यामेवदिशिअसाधारणवस्तून्युपकल्पनीयानि॥पवित्र
च्छेदनकुशैः पवित्रेछित्त्वाप्रादेशमितपवित्रकरणंसपवित्रहस्तेनप्रणीतोदकंत्रिःप्रोक्षणीपात्रेनिधा

यअनामिकांगुष्ठाभ्यामुत्तराग्रेपवित्रेगृहीत्वात्रिरुत्पवनंप्रणीतोदकेनप्रोक्षणीप्रोक्षणंप्रोक्षणीजलेन यथासादितवस्तुसेचनम्॥अग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रंनिधाय आज्यस्थाल्यामाज्यंनिरुप्य ततोऽधिश्रपणम्॥ ततस्तृणंप्रज्वाल्याग्निप्रदक्षिणंभ्रामयित्वा वह्नौतत्प्रक्षिप्य स्रुवःप्रतपनंकृत्वा संमार्जनकुशानामग्रैरग्रंमध्यैर्मध्यं मूलैर्मूलं स्रुवं संमार्जितं प्रणीतोदकेनाभ्युक्ष्यपुनःप्रताप्य स्रुवं दक्षिणतो निदध्यात् ॥ ततआज्यस्याग्नेरवतारणं ततआज्येप्रोक्षणीवदुत्पवनम्॥ अवेक्ष्य सत्यपद्रव्येतन्निरसनं पुनःप्रोक्षण्युत्पवनम् ॥ ततउपयमनकुशान्वामहस्तेकृत्वाउत्तिष्ठन् प्रजापतिंमनसाध्यात्वा तूष्णीमग्नौघृताक्ताःसमिधस्तिस्रःप्रक्षिपेत् ॥ ततउपविश्य सपवित्रप्रो क्षण्युदकेन प्रदक्षिणक्रमेणाग्निंपर्युक्षणंकृत्वा प्रणीतापात्रेपवित्रेनिधायपातितदक्षिणजानुः कुशा ग्रेण ब्रह्मणान्वारब्धः समिद्धतमेग्नौस्रुवेणाज्याहुतीर्जुहुयात् ॥ तत्राघारादारभ्यद्वादशाहुतिषु त त्तदाहुत्यनंतरंस्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रेप्रक्षेपः ॥ अथहोमः ॥ प्रथममाज्याहुतीर्द

ध्यात्॥ ॐ प्रजापतयेस्वाहा॥इदंप्रजापतयइतिमनसा॥ ॐ इंद्रायस्वाहाइदमिंद्राय॥इत्याघारौ॥ ॐ अग्नयेस्वाहाइदमग्नये ॥ ॐ सोमायस्वाहाइदंसोमाय ॥ इत्याज्यभागौ ॥ ॐ भूःस्वाहा इदंभूः॥ ॐ भुवःस्वाहाइदंभुवः॥ ॐ स्वःस्वाहाइदंस्वः ॥ एतामहाव्याहृतयः॥ ॐ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत्स्वाहा ॥ इदमग्नीवरुणाभ्यांनमः ॥ ॐ सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणꣳरराणोव्वीहिमृडीकꣳसुहवोनएधिस्वाहा ॥ इदमग्नीवरुणाभ्यां नमः ॥ २ ॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्वमयाऽअसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेषजꣳस्वाहा इदमग्नये ॥ ३ ॥ ॐ येतेशतंवरुणयेसहस्रंयाज्ञियाःपाशावितता महान्तः ॥ तेभिर्न्नोऽअद्यसवितोत्तविष्णुर्विश्वेमुंचंतुमरुतःस्वर्क्काःस्वाहा ॥ इदंसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यः ॥ ४ ॥ ॐ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय ॥ अथाव

यमादित्यव्रतेतवानागसोऽअदितयेस्यामस्वाहा इदंवरुणाय॥५॥इतिद्वादशाहुतयः॥ अथप्रोक्ष
णमन्त्रः ॥ ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्तेकृण्वंतुभेषजम्॥१॥ॐगणा
नांत्वेतिमंत्रेण गणपतयेनमःस्वाहा ॥अथनवग्रहहोमः ॥समिद्धोमंकुर्यात् ॥ अर्कःपलाशः ख
दिरोह्यपामार्गश्चपिप्पलः ॥ उदुंबरः शमी दूर्वाः कुशाश्चसमिधःक्रमात् ॥ अर्कोनाशयतेव्याधिं
पालाशीसर्वकामदा ॥खादिरीचार्थलाभायह्यपामार्गोवहुप्रजा॥ आश्वत्थीचशुभंदद्याद्धनंदद्यादु
दुंवरी ॥ शमीशमयतेपापंदूर्वामंगलवर्धिनी ॥कुशाश्चपितृतृप्त्यर्थमित्येताःसमिधोनव ॥अथा
र्कसमिद्भिर्जुहुयात् ॥ ॐ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंञ्च ॥ हिरण्ययेनसवितार
थेनादेवोयातिभुवनानिपश्यन्स्वाहा।इदंसूर्याय॥ १ ॥ अथपलाशसमिद्भिर्जुहुयात्॥ ॐ इमं
देवाऽअसपत्नꣳसुवद्धंमहतेक्षत्रायमहतेज्ज्यैष्ठ्यायमहतेजानराज्यायेन्द्रस्येंद्रियायइममसुष्यपुत्र
ममुष्यैपुत्रमस्यैविशऽएषवोमिराजासोमोस्माकंब्राह्मणानाꣳराजास्वाहा इदंचंद्राय ॥ २ ॥ ख

दिरसमिद्भिर्जुहुयात् ॥ ॐ अग्निर्मूर्द्धादिवःककुत्पतिःपृथिव्याअयम् ॥ अपाठंरेताठंसि
जिन्वतिस्वाहा इदंभौमाय ॥ ३ ॥ अपामार्गसमिद्भिर्जुहुयात ॥ ॐ उद्बुध्यस्वाग्नेप्रतिजागृहीत्वा
मिष्टापूर्तेसठंसृजेथामयंच ॥ अस्मिन्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदतस्वाहा
इदंबुधाय ॥ ४ ॥ अश्वत्थसमिद्भिर्जुहुयात् ॥ ॐ बृहस्पतेऽअतियदर्य्योऽअर्हाद्युमद्विभातिक्रतु
मज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणंधेहिचित्रंस्वाहा इदंबृहस्पतये ॥५॥ उ
दुंबरसमिद्भिर्जुहुयात् ॥ ॐ अन्नात्परिस्रुतोरसंब्रह्मणाव्यपिबत्क्षत्रंपयः सोमंप्रजापतिः ऋतेन
सत्यमिन्द्रियम्विपानठंशुक्रमंधसऽइंद्रस्येंद्रियमिदम्पयोमृतंमधुस्वाहा ॥ इदंशुक्राय ॥ ६ ॥
शमीसमिद्भिर्जुहुयात् ॥ ॐ शन्नोदेवीरभिष्टयऽआपोभवंतुपीतये ॥ शँय्योरभिस्रवंतुनःस्वाहा ॥
इदंशनैश्चराय ॥७॥ दूर्वासमिद्भिर्जुहुयात् ॥ ॐ कयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥ क
याशचिष्ठयावृतास्वाहा ॥ इदंराहवे ॥ ८ ॥ कुशसमिद्भिर्जुहुयात् ॥ ॐ केतुंकृण्वन्नकेतवेपेशो

मर्य्याअपेशसे ॥ समुपद्भिरजायथाःस्वाहा ॥ ९ ॥ इदंकेतवे ॥ शाकल्यसहिताः समिधो हस्ते
नादाय तत्तद्ग्रहमंत्रैर्जुहुयात् ॥ होमांतेपाणिनाजलमादाय तेनकृतेनहोमेननवग्रहाःप्रीयंताम् ॥
अथयजमानस्यमूर्द्धाभिषेकंकुर्यात् ॥ यथाबाणप्रहाराणांकवचंभवतिवारणम् ॥ तत्तद्दैवोपघा
तानांशांतिर्भवतुवारणम् ॥ इत्यनेन यजमानमभिषिंचेत् ॥ अमुकदेवताकृतशांतिरस्तु
पुष्टिरस्तुतुष्टिरस्तुवृद्धिरस्तुयच्छ्रेयस्तदस्तु यत्पापंरोगंकष्टंदरिद्रंतत्प्रणश्यतु भूमौजलंक्षिपेत्॥
द्विपदेभ्यश्चतुष्पदेभ्यःशांतिर्भवतु ॥ अथाधिदेवताहोमः ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धन
म् ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ त्र्यंबकंयजामहेसुगंधिंपतिवेदनम् ॥ उर्वारु
कमिवबंधनादितोमुक्षीयमामुतःस्वाहा इदंशिवाय ॥ १ ॥ ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रे
पार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाणस्वाहा २ इदं
गिरिजायै ॥ ॐ यदक्रन्दःप्रथमंजायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्य

दिरसामिद्भिर्जुहुयात् ॥ ॐ अग्निर्मूर्द्धादिवःककुत्पतिःपृथिव्याअयम् ॥ अपाᳫँरेताᳫँसि
जिन्वतिस्वाहा इदंभौमाय ॥ ३ ॥ अपामार्गसमिद्भिर्जुहुयात् ॥ ॐ उद्बुध्यस्वाग्नेप्रतिजागृहीत्वा
मिष्टापूर्तेसᳫँसृजेथामयंच ॥ अस्मिन्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदतस्वाहा
इदंबुधाय ॥ ४ ॥ अश्वत्थसमिद्भिर्जुहुयात् ॥ ॐ बृहस्पतेऽअतियदर्य्योऽअर्हाद्युमद्विभातिक्रतु
मज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणंधेहिचित्रंस्वाहा इदंबृहस्पतये ॥५॥ उ
दुंबरसमिद्भिर्जुहुयात् ॥ ॐ अन्नात्परिस्रुतोरसंब्रह्मणाव्यपिबत्क्षत्रंपयः सोमंप्रजापतिः ऋतेन
सत्यमिन्द्रियम्विपानᳫँशुक्रमंधसऽइंद्रस्येंद्रियमिदम्पयोमृतंमधुस्वाहा ॥ इदंशुक्राय ॥ ६ ॥
शमीसमिद्भिर्जुहुयात् ॥ ॐ शन्नोदेवीरभिष्टयऽआपोभवंतुपीतये ॥ शंय्योरभिस्रवंतुनःस्वाहा ॥
इदंशनैश्चराय ॥७॥ दूर्वासमिद्भिर्जुहुयात् ॥ ॐ कयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥ क
याशचिष्ठयावृतास्वाहा ॥ इदंराहवे ॥ ८ ॥ कुशसमिद्भिर्जुहुयात् ॥ ॐ केतुंकृण्वन्नकेतवेपेशो

मर्य्याअपेशसे ॥ समुपद्भिरजायथाःस्वाहा ॥ ९ ॥ इदंकेतवे ॥ शाकल्यसहिताः समिधो हस्ते नादाय तत्तद्ग्रहमंत्रैर्जुहुयात् ॥ होमांतेपाणिनाजलमादाय तेनकृतेनहोमेननवग्रहाःप्रीयंताम् ॥ अथयजमानस्यमूर्द्धाभिषेकंकुर्यात् ॥ यथावाणप्रहाराणांकवचंभवतिवारणम् ॥ तत्तद्दैवोपघा तानांशांतिर्भवतुवारणम् ॥ इत्यनेन यजमानमभिषिंचेत् ॥ अमुकदेवताकृतशांतिरस्तु पुष्टिरस्तुतुष्टिरस्तुवृद्धिरस्तुयच्छ्रेयस्तदस्तु यत्पापंरोगंकष्टंदारिद्रंतत्प्रणश्यतु भूमौजलंक्षिपेत्॥ द्विपदेभ्यश्चतुष्पदेभ्यःशांतिर्भवतु ॥ अथाधिदेवताहोमः ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धन म् ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ त्र्यंबकंयजामहेसुगंधिंपतिवेदनम् ॥ उर्वारु कमिवबंधनादितोमुक्षीयमामुतःस्वाहा इदंशिवाय ॥ १ ॥ ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रे पार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाण । सर्वलोकम्मऽइषाणस्वाहा २ इदं गिरिजायै ॥ ॐ यदक्रन्दःप्रथमंजायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्य

वाहूऽउपस्तुत्यम्महिजातंतेऽअर्व्वन्स्वाहा.३ इदंस्कंदाय ॥ विष्णोरराटमसिविष्णोःस्नप्त्रेस्थो
व्विष्णोःस्यूरसिव्विष्णोर्ध्रुवोसिवैष्णवमसिव्विष्णवेत्वास्वाहा ४ इदंविष्णवे ॥ॐब्रह्मजज्ञानंप्रथमं
पुरस्ताद्विसीमतःसुरुचोवेनआवः॥सबुध्न्याउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवःस्वाहा५
इदंब्रह्मणे ॥ ॐ त्रातारमिंद्रमवितारमिन्द्रठंहवेहवेसुहवठंशूरमिंद्रम्॥ह्वयामिशक्रंपुरुहूतमिंद्रठं
स्वस्तिनोमघवाधात्विंद्रःस्वाहा ६ इदमिंद्राय ॥ ॐ यमायत्वामखायत्वासूर्यस्यत्वातपसेदेव
स्त्वासवितामध्वानक्तुपृथिव्याःसठंस्पृशस्पाहि अर्चिरसिशोचिरसितपोसिस्वाहा ७ इदंयमा
य॥ ॐ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामिसमापोऽअद्भिरग्मतसमोषधीभिरोषधीःस्वाहा ८
इदंकालाय ॥ ॐ चित्रावसोस्वस्तितेपारमशीयस्वाहा ९ इदंचित्रगुप्ताय ॥ अधिदेवताप्रीतये
कृतंतत्सुकृतमस्तुहोमनिवेदनमभिषेचनंचपूर्ववत् ॥ यथावाणप्रहारणामितिमूर्द्धाभिषेकः ॥
अथ प्रत्यधिदेवताहोमः ॥ ॐ अग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२ऽआसादयादिहस्वाहा

इदमग्नये ॥ ॐ अश्वत्थेसाधिष्ठसौपधीरनुध्यसे ॥ गर्भेसंजायसेपुनःस्वाहा २ इदंअद्भ्यः ॥ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाःस्वाहा ३ इदंधरण्यै॥ ॐ विष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसिवैष्णवमासिविष्णवेत्वास्वाहा४इदंविष्णवे ॥ ॐ त्रातारमिंद्रमवितारमिंद्रर्ठहवेहवेसुहवर्ठशूरमिंद्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रर्ठस्वस्तिनोमघवाधात्विंद्रःस्वाहाइदमिंद्राय ॥ ॐ आदित्यैरास्नासीन्द्राण्याऽउष्णीषःपूषासिधर्म्मायदीष्वस्वाहा ६ इदमिंद्राण्यै ॥ ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनऽआवः॥ सबुध्न्याउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवःस्वाहा ७ इदंब्रह्मणे ॥ ॐनमोस्तुसर्पेभ्योयेकेचपृथिवीमनु॥ येऽअन्तरिक्षेयेदिवितेभ्यःसर्पेभ्योनमःस्वाहा ८ इदंसर्पेभ्यः ॥ ॐप्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयममुष्यपितासावस्यपितावयर्ठस्यामपतयोरयीणार्ठस्वाहा ९ इदंप्रजापतये ॥ प्रत्यधिदेवताप्रीतयेयत्कृतंतत्सुकृतंभ

वतु ॥ यथाबाणप्रहाराणामितिमूर्द्धाभिषेकः ॥ अथपंचलोकपालहोमः॥ॐगणानांत्वागणपति
ठ्ठंहवामहेप्प्रियाणांत्वाप्रियपतिठ्ठंहवामहे निधीनांत्वानिधीपतिठ्ठंहवामहेव्वसोमम । आहमजा
निगर्ब्भंधमात्वमजासीगर्ब्भंधंस्वाहा १ इदंगणपतये ॥ ॐअम्बेऽअम्बिकेम्बालिकेनमानयतिक
श्चनससस्त्यःश्वकःसुभद्रिकांकांपीलवासिनींस्वाहा २ इदमम्बिकायै ॥ ॐ वातोवामनोवागन्ध
र्वाःसप्तविठ्ठंशतिः तेऽअग्रेश्वमयुञ्जंस्तेऽस्मिन्नवमादधुःस्वाहा ३ इदंवायवे ॥ ॐ घृतंघृतपावा
नःपिबतव्वसांवसापावानः पिबतांतरिक्षस्य हविरसिस्वाहा दिशःप्रदिशआदिशोविदिशऽउद्दि
शोदिग्भ्यस्स्वाहा ४ इदमाकाशाय ॥ ॐ यावांकशामधुमत्यश्विनासूनृतावती ॥ तयायज्ञम्मि
मिक्षतंस्वाहा५इदमश्विभ्याम्॥पाठान्तरम्॥ ॐअश्विनातेजसाचक्षुःप्राणेनसरस्वतीवीर्यंवाचेंद्रो
बलेनेन्द्रायदधुरिन्द्रियंस्वाहा इदमश्विभ्याम् ॥ पंचलोकपालप्रीतयेयत्कृतंतत्सुकृतमस्तु॥यथा
बाणप्रहाराणामितिमूर्द्धाभिषेकः॥अथदशदिक्पालहोमः ॥ ॐत्रातारमिन्द्रमवितारमिंद्रठ्ठंहवेहवे

सुहवर्ठंश्शूरमिन्द्रम् ॥ ह्वयामिशक्रंपुरुहूतमिन्द्रर्ठंस्वस्तिनोमघवाधात्विन्द्रःस्वाहा १ इदमि
न्द्राय ॥ ॐ अग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२ऽआसादयादिहस्वाहा २ इदमग्नये ॥ ॐ
यमायत्वामखायत्वासूर्यस्यत्वातपसेदेवस्त्वासवितामध्वानक्तुपृथिव्याःसर्ठंस्पृशस्पाहि ॥ अ
र्चिरसिशोचिरसितपोसि स्वाहा ३ इदंयमाय ॥ ॐ असुन्वंतमयजमानमिच्छस्तेनस्येत्यामन्वि
हितस्करस्य ॥ अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तुस्वाहा ४ इदंनिर्ऋतये ॥
ॐ वरुणस्योत्तंभनमसिव्वरुणस्यस्कंभसर्ज्जनीस्थोव्वरुणस्यऽऋतसदन्यसिव्वरुणस्यऋतसद
नमसिवरुणस्यऋतसदनमासीदस्वाहा ५ इदंवरुणाय ॥ ॐ वायोयेतेसहस्रिणोरथासस्ते
भिरागहि ॥ नियुत्वान्सोमपीतयेस्वाहा ६ इदंवायवे ॥ ॐ कुविदंगयवमंतोयवंचिद्यथादा
न्त्यनुपूर्वंविपूयइहेहैषांकृणुहिभोजनानियेबर्हिषोनमऽउक्तिंयजंतिस्वाहा ७ इदंकुवेराय ॥ ॐ
तमीशानंजगतस्तस्थुषस्पतिन्धियाञ्जिन्वमवसेहूमहेवयम्॥ पूषानोयथावेदसामसद्वृधेरक्षितापा

युरदब्धःस्वस्तयेस्वाहा ८ इदमीशानाय ॥ ॐ अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौ सजोषाः ॥ यश्शर्ठंसतेस्तुवतेधायिवज्रइंद्रज्येष्ठाऽअस्मार्ठंऽअवन्तुदेवाःस्वाहा ९ इदंब्रह्मणे ॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाःस्वाहा १० इदमनंताय ॥ इन्द्रादिदशदिक्पालप्रीतयेयत्कृतंतत्सुकृतमस्तु ॥ यथाबाणप्रहाराणामितिमूर्द्धाभिषेकः ॥ अथमंडलमध्यस्थापितानांपितामहादीनांहोमः ॥ ॐ ब्रह्मजज्ञानमितिमंत्रेणब्रह्मणेनमः स्वाहा ॥ ॐ त्र्यंबकंयजामहेइतिमंत्रेण शिवायनमःस्वाहा ॥ ॐ इदंविष्णुरितिविष्णवेस्वाहा॥ॐगणानांत्वेतिगणपतयेस्वाहा ॥ ॐ श्रीश्चतेइति लक्ष्म्यैस्वाहा ॥ पंचनद्यःसरस्वतीमपियंतिसस्रोतसः सरस्वतीतुपंचधासोदेशोभवत्सरित्स्वाहा इदंसरस्वत्यै ॥ ॐ अम्बेऽअंबिकेंबालिकेनमानयाति कश्चन ॥ ससस्त्यश्वकःसुभद्रिकांकाम्पीलवासिनींस्वाहा इदंदुर्गायै ॥ ॐ नहिस्स्पृशमविदन्न स्यमस्माद्वैश्वानरात्पुरएतारमग्नेः। एमेनमवृधन्नमृताऽअमर्त्यं वैश्वानरंक्षेत्रजित्यायदेवाः स्वाहा

इदंक्षेत्रपालाय । ॐ भूतायत्वानारातयेस्वरभिविख्येपन्दृ०ंहन्तादुर्य्याः पृथिव्यामुर्व्वंतरिक्षम
न्वेमिपृथिव्यास्त्वानाभौसादयाम्म्यादित्याऽउपस्थेग्नेहव्यर्ठंरक्षस्वाहा इदंभूतेभ्यः। विश्वकर्मन्ह
विपावर्द्धनेनत्रातारमिन्द्रमकृणोरवद्यम् । तस्मैव्विशःसमनमंतपूर्व्वीरयमुग्रोविहव्योयथासत् ॥
उपयामगृहीतोसीन्द्रायत्वाविश्वकर्म्मणऽएपतेयोनिरिन्द्रायत्वाविश्वकर्मणेस्वाहा इदंविश्वकर्म
णे । अन्येभ्योमंडलमध्यस्थसर्वेभ्योदेवेभ्यःस्वाहा । पितामहादिसर्वदेवप्रीतये यत्कृतंतत्सुकृत
मस्तु यथाबाणप्रहाराणामितिमूर्द्धाभिपकः । अथगौर्यादिपोडशमातृहोमः । ॐ आयङ्गौःपृश्नि
रक्रमीदसदन्मातरंपुरः । पितरंचप्रयन्त्स्वःस्वाहा १ इदंगौर्य्यै । ॐ हिरण्यरूपाऽउपसोधिरो
कऽउभाविन्द्राऽउदिथःसूर्यश्च । आरोहणंतंव्वरुणमित्रगर्तंततश्चक्षुथामदितिंदितिंचमित्रोसिव्व
रुणोसिस्वाहा२इदंपद्मायै । ॐ कदाचनस्तरीरसिनेन्द्रसश्चसिदाशुपे । उपोपेन्नुमघवन्भूययन्नु
तेदानंदेवस्यपृच्यते ३ इदंशच्यै । ॐमेधां मेवरुणोददातुमेधामग्निःप्रजापतिः । मेधामिन्द्रश्चवा

युश्चमेधांधातादद्दातुमेस्वाहा ४ इदं मेधायै । ॐ तत्सवितुर्व्वरेण्यंभर्गोदेवस्यधीमहि । धियो
योनःप्रचोदयात् स्वाहा ५ इदंसावित्र्यै। ॐ विज्यंधनुःकपर्दिनोविशल्योबाणवाठंउत । अने
शन्नस्ययइषवआभुरस्यनिषङ्गधिः स्वाहा ६ इदं विजयायै । ॐ यातेरुद्रशिवातनूरघोरापाप
काशिनी । तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहिस्वाहा ७ इदंजयायै । ॐ देवानांभ
द्रासुमतिर्ऋजूयतांदेवानाठंरातिरभिनोनिवर्त्तताम् । देवानाठंसख्यमुपसेदिमाव्वयंदेवानआयुः
प्रतिरंतुजीवसेस्वाहा ८ इदंदेवसेनायै । ॐ पितृभ्यः स्वधायिभ्यःस्वधानमःपितामहेभ्यःस्वधा
यिभ्यःस्वधानमः प्रपितामहेभ्यःस्वधायिभ्यःस्वधानमः । अक्षन्पितरोमीमदन्तपितरोतृपन्त
पितरःपितरःशुन्धद्ध्वंस्वाहा९इदं स्वधायै । ॐ स्वाहायज्ञंमिमिक्षतःस्वाहोरोरन्तरिक्षात्स्वाहा ।
द्यावापृथिवीभ्याठंस्वाहा वातादारभेस्वाहा१०इदंस्वाहायै। ॐआपोऽअस्मान्मातरःशुंधयंतुघृ
तेननोघृतप्वःपुनन्तु॥विश्वठंहिरिप्रंप्रवहन्तिदेवीरुदिदाभ्यः शुचिरापूतऽएमिदीक्षातपसोस्तनू

रसितांत्वाशिवाठं शग्मांपरिदधेभद्रंवर्णपुष्यन्स्वाहा ११ इदंमातृभ्यः। ॐ भवतन्नःसमनसौस
चेतसावरेपसौमायज्ञठंहिठंसिष्टंमायज्ञपतिं जातवेदसौशिवोभवतमद्यनःस्वाहा १२ इदंलोक
मातृभ्यः। ॐ यत्प्रज्ञानमुतचेतोधृतिश्चयज्योतिरन्तरमृतंप्रजासु। यस्मान्नऽऋतेकिञ्चनकर्म
क्रियतेतन्मेमनःशिवसंकल्पमस्तुस्वाहा १३ इदंधृत्यै। ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशा
स्तेयजमानोहविर्भिः। अहेडमानोवरुणेहवोध्युरुशठंसमानऽआयुःप्रमोषीःस्वाहा १४ इदंपु
ष्टै। ॐ बृहस्पतेपरिदीयारथेनरक्षोहामित्राँऽअपवाधमानः। प्रभंजन्त्सेनाःप्रमृणोयुधाजयन्न
स्माकमेध्यवितारथानांस्वाहा १५ इदंतुष्ट्यै। ॐ प्राणायस्वाहा अपानायस्वाहा व्यानायस्वा
हा अम्बेअम्बिकेऽम्बालिकेनमानयतिकश्चन ससस्त्यश्वकःसुभद्रांकाम्पीलवासिनींस्वाहा १६
इदमात्मकुलदेव्यै। गौर्य्यादिषोडशमातृप्रीतयेयत्कृतंतत्सुकृतमस्तु। यथाबाणप्रहाराणामिति
मूर्द्धाभिषेकः। ॐ व्वसोःपवित्रमसिशतधारंव्वसोःपवित्रमसिसहस्रधारम्। देवस्त्वासवितापुना

तुव्वसोःपवित्रेणशतधारेणसुप्वाकामधुक्षःस्वाहा १ इदंवसोर्द्धाराभ्यः। ॐ वरुणस्योत्तमितिमं त्रेणकलशस्थदेवेभ्यः स्वाहा। अथप्रधानदेवताहोमः ।प्रधानदेवस्ययाऋक्तयाहोमंकुर्यात्। ॐ अगस्त्यायस्वाहा। अश्विन्यादिअष्टाविंशतिनक्षत्रेभ्यःस्वाहा। मेषादिद्वादशराशिभ्यःस्वाहा। ऋग्वेदादिचतुर्वेदेभ्यःस्वाहा। कश्यपादिसप्तऋषिभ्यः स्वाहा। अष्टवसुभ्यः स्वाहा। एकादशरुद्रेभ्यः स्वाहा। द्वादशादित्येभ्यः स्वाहा। एकोनपंचाशन्मरुद्भ्यःस्वाहा। त्रयोदशविश्वेदेवेभ्यःस्वाहा। पितृभ्यःस्वाहा ।क्षारादिसप्तसमुद्रेभ्यः स्वाहा ॥ अष्टनागकुलेभ्यः स्वाहा ॥ चतुःषष्टियोगिनीभ्यः स्वाहा ॥ सिद्धेभ्यः स्वाहा॥ स० दे० स्वाहा ॥ प्रधानदेवताद्प्रीतयेयत्कृतंतत्सुकृतंभवतु॥ यथावाणप्रहाराणामितिमूर्द्धाभिषेकंकुर्यात् ॥ प्रधानदेवतादिहोमांतेअग्निपूजास्विष्टकृत् ॥ तत्रदुर्गोत्सवे ॐ जयंतीमंगलाकालीभद्रकालीकपालिनी ॥ दुर्गाक्षमाशिवाधात्रीस्वाहास्वधानमोस्तुते ॥इतिमूलमंत्रेण दशाज्याहुतीर्दद्यात ॥ प्रत्यध्यायं

पूगीफलताम्बूलशाकल्यरकाहुात अवऽआम्बकम्बालिके इतिमन्त्रेणदद्यात्॥ अन्यहोमेतत्तन्मंत्रे णहोमंकुर्यात् ॥ अन्यहोमेतत्तद्देवतानाममंत्रेणहोमंकुर्यादित्यर्थः ॥ होमांतेपुनराग्निपूजनम् ॥ ॐ अग्नेनयसुपथारायेअस्मान्विश्वानिदेवव्वयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमऽउक्तिंविधेम ॥१ ॥ एतानिपाद्यार्घ्याचमनीयानि अग्नयेनमः इदमनुलेपनंसमर्पयामि ॥ ॐ युंजन्तिब्रध्नमरुपंचरंतंपरितस्थुपः॥ रोचंतेरोचनादिवि ॥ युंजंत्यस्यकाम्याहरीविपक्षसारथे ॥ शोणाधृष्णूनृवाहसा ॥ २ ॥ इदंरोचनंरक्तचन्दनम् ॥ ॐअक्षन्नमीमदंतह्यवप्रियाऽअधूपत ॥ अस्तोपतस्वभानवोविप्रानविष्ठयामती योजान्विन्द्रतेहरी ॥ ३ ॥ इत्यक्षतमंत्रः॥ ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमाश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ॥ ४ ॥ इतिपुष्पमंत्रः ॥ धूरसिधूर्वन्तंधूर्वतंयोस्मान्धूर्व्वयम्वयन्धूर्वामः ॥ देवानामसिवह्नितमर्ठसस्नितमम्पप्रितमंजुष्टतमं देवहूतमम् ॥५ ॥इतिधूपमंत्रः ॐ अ

ग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ॥ सूर्य्योज्योतिःसूर्य्यःस्वाहा ॥ अ० व० अग्निर्वर्चोज्योतिर्व र्चः स्वाहा ॥ सूर्य्योवर्चोज्योतिर्वर्चःस्वाहा ॥ ज्योतिःसूर्य्यःसूर्य्योज्योतिः स्वाहा ॥ ६ ॥ इतिदीपमंत्रः ॥ ॐ नाभ्याऽआसीदन्तरिक्षठंशीर्ष्णोद्यौःसमवर्त्तत ॥ पद्भ्यांभूमिर्दिशः श्रोत्रात्त थालोकाँ२अकल्पयन् ॥७॥ इतिनैवेद्यमंत्रः ॥ नैवेद्यांतेआचमनीयम् ॐ याःफलिनीर्य्याऽअ फलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचन्त्वठंहसः ॥८॥ इतितांबूलमंत्रः॥ ॐ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातः पतिरेकऽआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदे वायहविषाविधेम ॥ ९॥ इति दक्षिणामंत्रः ॥ पाणिनाजलमादाय पत्राक्षतगंधपुष्पधूपदी पनैवेद्यसहितयानयापूजयाअग्निःप्रीयताम्॥अथस्विष्टकृत॥अग्नयेस्विष्टकृतेस्वाहाइदमग्नयेस्वि ष्टकृतेनमम ॥ अथ नवाहुतयोघृतेन ॥ॐ भूःस्वाहा इदमग्नये ॥ ॐ भुवःस्वाहा इदंवायवे ॥ ॐस्वःस्वाहा इदंसूर्याय॥ इतिव्याहृतिहोमः॥ ॐत्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवया

सिसीष्ठाः ॥ यजिष्ठोवह्नितमः शोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत्स्वाहा १ इदमग्नीवरुणाभ्यांनमम ॥ ॐ सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउपसोव्युष्टौ ॥ अवयक्ष्वनोवरुणꣳरराणोव्वीहिमृडीकꣳसुहवोनऽएधिस्वाहा २ इदमग्नीवरुणाभ्यांनमम ॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्वमयाअसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेषजꣳस्वाहा ॥ ३ ॥ इदमग्नये ॥ ॐ येतेशतंवरुणयेसहस्रंयज्ञियाःपाशाविततामहान्तः ॥ तेभिर्न्नोऽअद्यसवितोत्तविष्णुर्विश्वेमुंचंतुमरुतःस्वर्क्काः स्वाहा ॥ ४ ॥ इदंसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यः स्वर्केभ्यः॥ॐ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय ॥ अथाव्वयमादित्यव्रतेतवानागसोऽअदितयेस्याम स्वाहा ॥ ५ ॥ इदंवरुणायादितयेनमम ॥ ॐ प्रजापतयेस्वाहा इदंप्रजापतये ॥ ६ ॥ अथदशदिक्पालबलिः ॥ पूर्वादिदिशिक्रमात् ॥ पूर्वे ॐ त्रातारमिन्द्रमवितारमिंद्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रꣳस्वस्तिनोमघवाधात्विंद्रः ॥ १ ॥ इंद्रायसांगायसपरिवाराय

सायुधायसशक्तिकायएतंसदीपंदधिमापभक्तबलिंसमर्पयामि ॥ भोइंद्र दिशंरक्षबलिंभक्ष अस्य
यजमानस्यसकुटुंबस्यआयुष्कर्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तावरदोभव पूर्वेदिशिब
लिंसमर्पयामि ॥ आग्नेय्याम् ॐ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः॥यजिष्ठो
वह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥२॥अग्नयेसांगायसपरिवारायसायुधायसश
क्तिकायएतंसदीपंदधिमापभक्तबलिंसमर्पयामि॥भोअग्ने दिशंरक्षबलिंभक्ष ममयजमानस्य सकु
टुंबस्यायुष्कर्ताक्षेमकर्ताशान्तिकर्तापुष्टिकर्तातुष्टिकर्तानिर्विघ्नकर्तावरदोभव॥ दक्षिणे ॐ यमा
यत्वामखायत्वासूर्यस्यत्वातपसेदेवस्त्वासवितामध्वानक्तुपृथिव्याःसꣳस्पृशस्पाहि अर्चि
रसिशोचिरसितपोसि॥३॥यमायसांगायसपरिवारायसायुधायसशक्तिकायएतंसदीपं दधिमापभ
क्तबलिंसमर्पयामि ॥ भोयमदिशंरक्षबलिंभक्षममयजमानस्यसकुटुंबस्यआयुष्कर्ताक्षेमकर्ताशां
तिकर्तापुष्टिकर्तातुष्टिकर्तावरदोभव ॥ नैर्ऋत्यां ॐ असुन्वंतमयजमानमिच्छस्तेनस्येत्यामन्वि

हितस्करस्यअन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥४॥ निर्ऋतयेसांगायसपरि
वारायसायुधायसशक्तिकायएतंसदीपंदधिमापभक्तबलिंसमर्प्पयामि ॥भोनिर्ऋतेदिशंरक्षबलिंभ
क्ष अस्ययजमानस्यसकुटुंबस्य आयुष्कर्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तावरदोभव॥प
श्चिमे ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः॥अहेडमानोवरुणेहबोध्युरुश
ꣳसमानआयुःप्रमोषीः ॥५॥ वरुणायसांगायसपरिवारायसायुधायसशक्तिकायएतंसदीपंदधिमा
पभक्तबलिंसमर्पयामि॥ भोवरुण दिशंरक्षबलिंभक्ष ममयजमानस्यसकुटुंबस्यआयुष्कर्ताक्षेमक
र्ताशांतितापुष्टिकर्तातुष्टिकर्तावरदोभव॥वायव्ये ॐ आनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणी
भिरुपयाहियज्ञम्॥व्वायोऽअस्मिन्सवनेमादयस्वयूयंपातस्वस्तिभिःसदानः ॥६॥वायवेसांगाय
सपरिवारायसायुधायसशक्तिकायएतंसदीपंदधिमापभक्तबलिंसमर्पयामि॥भोवायोदिशंरक्षबलिं
भक्ष अस्ययजमानस्यसकुटुंबस्य आयुष्कर्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तावरदोभव॥

उत्तरे ॐ वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतःसचेमहि ॥ ७ ॥कुवेरायसांगायसप
रिवारायसायुधायसशक्तिकाय एतंसदीपंदधिमापभक्तवलिंसमर्पयामि ॥ भोकुवेर दिशंरक्षबलिं
गजमानस्यसकुटुंबस्यसपरिवारस्य आयुष्कर्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिक
ऐशान्यां ॐतमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयम् ॥ पूषा
सद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ८ ॥ ईशानायसांगायसपरिवारायसायुधायस
श क्तिकायएतंसदीपंदधिमापभक्तबलिंसमर्पयामि ॥ भोईशान दिशंरक्षबलिंभक्ष अस्ययजमान
म्कर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तावरदोभव॥ईशानपूर्वयोर्मध्ये ब्रह्मणे ॐ अ
महत्येभरहूतौसजोषाः॥ यश्शꣳसतेस्तुवतेधायिवज्रऽइंद्रज्येष्ठाऽअस्मा
ह्मणेसांगायसपरिवारायसायुधायसशक्तिकाय एतंसदीपंदधिमापभक्तव
भ न् दिशंरक्षबलिंभक्ष अस्ययजमानस्यसकुटुंबस्य आयुष्कर्ताक्षेमकर्ता

शांतिकर्तापुष्टिकर्तातुष्टिकर्तावरदोभव॥निर्ऋतिपश्चिमयोर्मध्ये अनंतम् ॐ स्योनापृथिविनोभ
वानृक्षरानिवेशनी॥यच्छानःशर्म्मसप्रथाः॥१०॥ अनंताय सांगायसपरिवारायसायुधायसशक्ति
कायएतंसदीपंदधिमाषभक्तबलिंसमर्पयामि ॥ भोअनंत दिशंरक्ष बलिंभक्ष ममयजमानस्यसकु
टुंबस्य आयुष्कर्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तावरदोभव॥ इतिदशदिक्पालबलिः॥
अथनवग्रहबलिः॥ ॐग्रहाऽऊर्जाहुतयोव्यंतविप्रायमतिम्॥ तेषांविशिप्रियाणांवाहमिषमूर्जंर्ठ्ंस
मग्रभम्॥१॥ग्रहेभ्यः सांगेभ्यः सपरिवारेभ्यःसायुधेभ्यः सशक्तिकेभ्यः एतंसदीपंदधिमाषभक्तब
लिंसमर्पयामि॥ भोग्रहाः दिशंरक्षत बलिंभक्षत ममयजमानस्य सकुटुंबस्य आयुष्कर्तारःक्षेमक
र्तारः शांतिकर्तारः पुष्टिकर्तारःतुष्टिकर्तारः वरदा भवत॥इतिनवग्रहमखः ॥ ॐ अम्बेऽअम्बि
केऽम्बालिकेनमानयतिकश्चनससस्त्यश्वकः सुभद्रिकांकांपीलवासिनीम् ॥ २ ॥ ॐ दुर्गायैसां
गायैसपरिवारायैसायुधायैसशक्तिकायै एतंसदीपंदधिमाषभक्तबलिंसमर्पयामि ॥ भोदुर्गे दिशंर

क्ष वलिंभक्ष ममयजमानस्य आयुष्कर्त्रीक्षेमकर्त्रीपुष्टिकर्त्रीतुष्टिकर्त्रीवरदाभव इतिदुर्गायैवलिंद
द्यात् ॥ अथप्रधानदेववलिः ॥ प्रधानदेवमंत्रेण प्रधानदेवाय सांगायसपरिवारायसायुधायसशक्ति
काय एतंसदीपंदधिमाषभक्तवलिंसमर्पयामि॥भोप्रधानदेव दिशंरक्षवलिंभक्षममयजमानस्यसकु
टुंबस्य आयुष्कर्ता क्षेमकर्ता पुष्टिकर्तातुष्टिकर्ता वरदोभव॥अथ क्षेत्रपालवलिः॥ दधिमाषसि
दूरकज्जलदीपद्रव्यसहितान्पात्रेनिधायॐनहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरएतारमग्नेः ॥
एमेनमवृधन्नमृताऽमर्त्यंवैश्वानरंक्षेत्रजित्यायदेवाः॥ॐक्षेत्रपालाय शाकिनीडाकिनीभूतप्रेतवेता
लपिशाचसहिताय इमंवलिंसमर्पयामि॥भोक्षेत्रपाल दिशंरक्षवलिंभक्ष ममयजमानस्यसकुटुंब
स्यआयुष्कर्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तावरदोभव॥द्यौःशांतिरितिमंत्रंपठेत्॥अथ
पूर्णाहुतिः॥मूर्द्धानंदिवोऽअरतिंपृथिव्यावैश्वानरमृतऽआजातमग्निम्॥कविंसम्राजमतिथिंजना
नामासन्नापात्रंजनयंतदेवाः ॥ १ ॥ वसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देव

स्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः ॥२॥ पूर्णादर्विपरापतसुपूर्णापुनराप
त॥वस्नेवविक्रोणावहाऽइपमूर्ज्जंशतक्रतो ॥३॥ पुनस्त्वादित्यारुद्रावसवःसमिन्धतां पुनर्ब्रह्मा
णोवसुनोथयज्ञैः॥घृतेनत्वंतन्वंवर्द्धयस्वसत्याःसंतुयजमानस्यकामाः स्वाहा ॥ ४ ॥ इतिपूर्णाहु
तिः॥अथ त्र्यायुपकरणम्॥त्र्यायुपंजमदग्नेरितिललाटे॥कश्यपस्यत्र्यायुपामितिग्रीवायाम्॥यद्दे
वेषुत्र्यायुपमितिदक्षिणबाहुमूले॥ तन्नोऽअस्तुत्र्यायुपमितिहृदि ॥१॥ संस्रवप्राशनं पवित्राभ्यां
मार्जनम्॥पवित्रंप्रतिप्रणीताविमोकः॥ततःपात्रेण जलमादायाग्नेयमुपरिभ्रामयित्वा॥२॥ तज्जले
नयजमानमूर्द्धनिकुशैरभिषेकंकुर्यात्॥ॐ सुमित्रियानऽआपऽओषधयःसन्तु ॥ शांतिरस्तु पुष्टि
रस्तु वृद्धिरस्तुयद्यच्छ्रेयस्तत्तदस्तु॥यत्पापंरोगंतत्प्रणश्यतु द्विपदेभ्यश्चतुष्पदेभ्यःशांतिर्भव
तु॥ॐदुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः ॥ इतिमंत्रेणैशान्यांप्रणीतान्युब्जीकुर्या
त॥अथब्रह्मणेपूर्णपात्रदानम्॥ ब्रह्मग्रंथिविमोकः ॥ कृतस्यहोमकर्म्मणःसांगतासिद्ध्यर्थमिदंपूर्ण

पात्रंसदक्षिणं ब्रह्मणेतुभ्यमहंसंप्रददे॥ अथ व्रींहिंहोंम:॥ॐदेवागातुविदोगातुंवित्वागातुमित मनस
स्पतऽइमंदेवयज्ञठ्ंस्वाहाव्वातेधाः स्वाहा ॥ अथवैदिकमंत्रैरभिषेकंकृत्वा अथामृताभिषेकंपौ
राणिकमंत्रैश्चकुर्यात्॥तद्यथा ॐसुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः॥ वासुदेवोजगन्नाथस्त
थासंकर्षणोविभुः॥प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्त
था॥वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः॥ब्रह्मणासहिताःशेषाःदिक्पालाःपान्तुवःसदा॥ कीर्ति
र्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशांतिस्तुष्टिःकांतिश्चमातरः ॥ एता
स्त्वामभिषिंचंतुदेवपत्न्यः समागताः ॥ आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः ॥ ग्रहास्त्वा
मभिषिंचंतुराहुःकेतुश्चतर्पिताः ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ऋषयोमनवोगावोदे
वमातरएवच ॥ देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाह
नानिच ॥ औषधानिचरत्नानिकालस्यावयवाश्चये ॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः ॥

एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये ॥ अथाभिषेकोत्तरम् ॥ शुक्लांबरधरः शुक्लमाल्यानुलेपनो यजमानो ह्याचार्यादीनांगंधमाल्यादिभिरभ्यर्च्याचार्यायब्रह्मणेऋत्विग्भ्योवित्तानुसारेणदक्षिणां दद्यात् ॥ तत्रप्रयोगः ॥ अद्येत्यादिकालज्ञानंकृत्वाऽस्यनवग्रहमखकर्म्मणः सांगतासिद्ध्यर्थम मुकगोत्राय अमुकशर्मणे आचार्याय अमुकवेदैकशाखाध्यायिने इमांसुवर्णादिदक्षिणांतुभ्यम हंसंप्रददे ॥ एवंब्रह्मणेऋत्विग्भ्यः ॥ तत्रसूर्यादीनांग्रहाणामपिदक्षिणांदद्यात् ॥ ततोयज मानः अन्यान्ब्राह्मणानपिवित्तानुसारेणगोभूहिरण्यवस्त्रान्नदानादिभिः पूजयेत् ॥ ग्रहांश्चविशे षेणपूजयेत् ॥ यस्तुग्रहोगोचरद्वारापीडांकरोतिजन्मकालेवाऽनिष्टस्थानस्थितोभवति ॥ दशा दिष्वशुभदोभवति तंजपहोमदानादिभिर्विशेषेणपूजयेत् शांतिकरोभवति॥उक्तंच । ग्रहागावो नरेंद्राश्चब्राह्मणाश्चविशेषतः ॥ पूजिताः पूजयंत्येतेनिर्दहंत्यवमानिताः ॥ एवमग्नेः पश्चादवस्थि तो यजमानो दक्षिणांदत्त्वा अथाग्निंविसृज्य ॥ ॐगच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर॥यत्रब्रह्मा

दयोदेवास्तत्रगच्छहुताशन॥नवग्रहादीन्विसर्जयेत् ॥ अक्षतानादाय ॐ यांतुदेवगणाः सर्वे पूजामादायमामकीम्॥ इष्टकामसमृद्ध्यर्थंपुनरागमनायच॥तिलकम् ॐस्वस्तिनइंद्रोवृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ १ ॥ पुनस्त्वादित्यारुद्रावसवः समिन्धतांपुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वन्तन्न्वंवर्द्धयस्वसत्याः संतुयजमानस्यकामाः ॥ २ ॥ मंत्रार्थाः सफलाः संतु पूर्णाः संतुमनोरथाः ॥ शत्रूणांबुद्धिनाशोस्तुमित्राणामुदयोस्तुवः ॥ ३ ॥ प्रार्थना ॥ कृतस्यैतस्यविधेः न्यूनातिरिक्तंयत्कृतमस्ति तद्विष्णोः प्रसादाद्ब्राह्मणवचनात्सर्वं परिपूर्णमस्तु ॥ ततोब्राह्मणान् भोजयित्वा कुटुंबजनैः परिवृतोभोजनंकुर्यात् ॥ दिविभुव्यन्तरिक्षेषुउत्पातेषुजातेषुउद्वेगाद्भुतादिषुचशांत्यर्थं कर्तव्यम् ॥ अनेनविधिनायस्तुग्रहपूजांसमाचरेत् ॥ सर्वान्कामानवाप्नोतिस्वर्गलोकेमहीयते ॥ १ ॥ इतिलंबोदरविरचिता होमपद्धतिः समाप्ता ॥ श्रीमद्गोपालकृष्णःप्रसन्नोभवतु ॥

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासतनूजेन खेमराजेन स्वकीये
" श्रीवेङ्कटेश्वर " मुद्रणालयेऽङ्कयित्वा प्रकाशितम् ।
शके १८२२, संवत् १९५७.

गाहि-

# विक्रय्यपुस्तकोंकी संक्षिप्त सूची ।



| | की॰ रु॰ | आ॰ | | की॰ रु॰ | आ॰ |
|---|---|---|---|---|---|
| संस्कारभास्कर(यजुर्वेदी सब संस्कारोंकी विधि प्रयोग और मंत्र सहित) | २ | १२ | स्वस्तिवाचन ( पुण्याहवाचन ) | ० | १॥ |
| जन्मदिनपूजापद्धति. ... ... | ० | २ | दशकर्मपद्धति. ( दशोंसंस्कार) | ० | ७ |
| गोदानपद्धति. ... ... ... | ० | १॥ | वासिष्ठीहवनपद्धति ... ... | ० | ४ |
| पूजापंकजभास्कर. ... ... | २ | ० | लंबोदरीहवनपद्धति ... ... | ० | ४ |
| सकामशिवपूजन विधान भा. टी. | ० | ४ | एकोद्दिष्टश्राद्धप्रयोग ... ... | ० | २ |
| | | | पार्वणश्राद्धप्रयोग ... ... | ० | २ |

रात.

| | | |
|---|---|---|
| उपाकर्मपद्धति ( श्रावणीयजुर्वेदकी) | ० | १२ |
| कर्मविपाकचरणगत रफ़१० आ० ग्लेज | | १२ |
| कर्मविपाक भाषाटीका ... ... | १ | ४ |
| वेदोक्तवास्तुपद्धति. ... ... | ० | ६ |
| व्रतोद्यापनकौमुदी. ... ... | ० | १२ |
| दानसंग्रह सब प्रकारके दानकीविधिहैं | १ | ४ |
| कुंडविंशति ( कुंडकेबीसग्रंथहैं ) | ० | १२ |
| सर्वदेवप्रतिष्ठासंग्रह पं० रामलालजी पट्टशास्त्रीकृत ( प्रतिष्ठा करानेका ऐसा ग्रंथ आजतक अन्यत्र नहीं छपा ) | ३ | ० |
| विवाहपद्धति मूल बड़े अक्षरोंकी | ० | ६ |
| यज्ञोपवीत मूल ... ... | ० | २ |
| तथा भाषाटीका ... ... | ० | ८ |
| नवरत्नविवाहपद्धति भाषाटीका | १ | ४ |
| वैवाहपद्यावली ( नौतनी अर्थात् विनतीमेंकहने योग्य दोनोंपक्षकेश्लोक भाषाटीका ... ... ... | ० | १२ |
| ज्येष्ठाशांति ... ... ... | ० | २ |
| पंचकशांति ... ... ... | ० | २ |
| नवग्रहविधानपद्धति ... ... | ० | ४ |

जाहि-

| | | |
|---|---|---|
| जलोत्सर्गप्रकाश वापी, कूप तड़ागादिका उत्सर्ग ... ... | १ | १२ |
| तुलसीविवाहपद्धति ... ... | ० | ३ |
| शूद्रविवाहपद्धति ... ... | ० | ३ |
| प्रपंचसारविवेक ... ... ... | १ | ० |
| अंत्येष्टचर्क–यजुर्वेदीय प्रेतकृत्यका अत्यन्तउपयोगी ग्रंथ ... ... | २ | ० |
| नित्यतंत्र भापाटीका ... ... | ० | १२ |
| पार्वणश्राद्धपद्धति भापाटीका ... | ० | ४ |
| एकोद्दिष्टश्राद्धपद्धति भापाटीका | ० | ३ |
| नवग्रहकाण्डी ( नित्यपूजाविधानपद्धति ) | २ | |
| वरदगणेशपूजा ... ... ... | ० | १॥ |
| वृद्धिश्राद्ध ( नान्दीमुख ) ... | ० | ४ |
| संध्यायजुर्वेदी मूल १॥ आ० और भापाटीका समेत ... ... | ० | १॥ |
| श्राद्धप्रकाश ( जिसमें गौड़ ब्राह्मणोंके श्राद्धों से लेकर शूद्र श्राद्धों पर्यंत श्राद्ध मात्रके निर्णय और पद्धतियां ऐसी रीतिसे कही हैं कि श्राद्ध विपय का अन्य ग्रंथ ऐसा नहीं ) ... | ३ | ० |

रात.

| | | |
|---|---|---|
| सन्ध्यावन्दन तीन टीकाओं समेत | ० | ६ |
| संध्यात्रैणवी. ... ... ... | ० | १ |
| क्षत्रियसंध्या. ... ... ... | ० | १ |
| वैश्यसंध्या. ... ... ... | ० | १ |
| कात्यायनी तर्पण ... ... | ० | १॥ |
| नित्यकर्मपद्धति ... ... | ० | २ |
| नारायणबलि ... ... ... | ० | ६ |
| कुशकंडिकाभाष्य ... ... | ० | ४ |
| सर्वपूजा ... ... | ० | २ |
| शिवार्चनपद्धति [ वेदोक्त ] ... | ० | ४ |
| रुद्रविधानपद्धति ... ... | ० | ६ |
| कात्यायनीशांति ... ... | ० | २ |
| यजु०आह्निक(प्रातःकालसेशयनपर्यन्तकेकर्म ) ... ... | १ | ० |
| पंचयज्ञ संस्कृतटीका सहित ... | ० | ८ |
| पंचयज्ञ भाषाटीका .... ... | ० | ४ |

पुस्तक मिलनेका ठिकाना–

खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" छापाखाना–मुंबई.

॥ इति लम्बोदरीहोमपद्धतिःसमाप्ता ॥

VIDYA BHAVAN ... RY.